राजा—स्पृहयामि खलु दुर्ललितायास्मै—

आलक्ष्यदन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान् वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति ।। १७ ।।

तापसी—होदु । ण मं अअं गणेदि । ( पार्श्वमवलोकयति ) को एत्थ इसिकुमाराणं । ( राजानमवलोक्य ) भद्दमुह एहिं दाव । मोआए हि इमिणा दुम्मोअहत्थग्गहेण डिम्भलीलाए बाहीअमाणं बालमिइन्दअं । [ भवतु । न मामयं गणयति । कोऽत्र ऋषिकुमाराणाम् ! भद्रमुख, एहि तावत् मोचयानेन दुर्मोकहस्तग्रहेण डिम्भलीलया बाध्यमानं बालमृगेन्द्रम् । ]

---

हिन्दी अनुवाद—राजा—सचमुच इस हठी को प्यार करता हूँ ।

संस्कृत-टीका—राजा नृपः । स्पृहयामि स्निह्यामि । खलु निश्चयेन । दुर्ललिताय निर्बन्धिने । अस्मै एतस्मै ( बालाय ) । स्पृहयामि ।

हिन्दी व्याख्या—"दुर्ललित" से हिन्दी में "दुलारा" शब्द आया है ।

हिन्दी-अनुवाद—धन्य लोग (ही ) अकारण हासों से कुछ दिखाई पड़ रही दाँत-रूपी कलियों वाले, स्पष्ट वर्ण और कमनीय बोली वाले तथा गोद की शरण की अभिलाषा वाले पुत्रों को धारण करते हुए उनके शरीर की धूल से धूसरित होते हैं ।

अन्वयः—धन्याः ( जनाः एव ) अनिमित्तहासैः आलक्ष्यदन्तमुकुलान् अव्यक्तवर्णरमणीयवचः प्रवृत्तीन् अङ्काश्रयप्रणयिनः तनयान् वहन्तः तदङ्गरजसा मलिनीभवन्ति ।

संस्कृत-टीका—धन्याः सौभाग्यशालिनः ( जनाः एव ) न निमित्तम् कारणम् यत्र तादृशाः ( अनिमित्ताः ) च ते हासाः हसितानि च तैः । आ ईषत् लक्ष्याः दृश्याः दन्ताः रदाः मुकुलाः कलिकाः इव येषाम् तादृशान् । न व्यक्ताः स्पष्टाः अव्यक्ताः तादृशाः च ते वर्णाः अक्षराणि च तैः रमणीया कमनीया वचसाम् वचनानाम् प्रवृत्तिः व्यापारः येषाम् तादृशान् । अङ्कस्य क्रोडस्य आश्रयः शरणम् ( उपवेशनम् ) तत्प्रणयिनः तदभिलाषुकान् । तनयान् पुत्रान् । वहन्तः धारयन्तः । तेषाम् ( पुत्राणाम् ) अङ्गानाम् अवयवानाम् रजसा धूलिभिः । अमलिनाः मलिनाः भवन्ति ।

हिन्दी व्याख्या—अंतिम चरण से व्यक्त होता है कि पुत्रहीन मैं अधन्य हूँ ।

छन्द—१।८ द्रष्टव्य ।

अलंकार—अप्रस्तुतप्रशंसा व अनुप्रास ( छेक, वृत्ति व श्रुति ) ।

हिन्दी-अनुवाद—तपस्विनी—छोड़ो । (अरे !) यह मुझे गिनता (ही) नहीं । ( पास देखती है ) मुनि-पुत्रों में से यहाँ कौन है ? (राजा को देखकर) सुमुख (अच्छी आकृति वाले), जरा आयं, इसकी न छुड़ाई जाने योग्य हाथ की पकड़ से बाल-क्रीडा में परेशान किये जा रहे शिशु सिंह को छुड़ा दें ।

संस्कृत टीका—तापसी तपस्विनी । भवतु अलम् । न माम् । अयम् ( बालः ) । गणयति किमपि मन्यते । पार्श्वम् समीपम् । अवलोकयति पश्यति कः । अत्र इह । ऋषीणाम् मुनीनाम् कुमाराणाम् सुतानाम् । राजानम् नृपम् अवलोक्य दृष्ट्वा भद्रम् शोभनम् । मुखम् वदनम् यस्य

**राजा**—( उपगम्य सस्मितम् ) अयि भो महर्षिपुत्र ।

एवमाश्रमविरुद्धवृत्तिना संयमः किमिति जन्मतस्त्वया ।
सत्त्वसंश्रयसुखोऽपि दुष्यते कृष्णसर्पशिशुनेव चन्दनम् ॥ १८ ॥

**तापसी**—भद्दमुह ण खु अअं इसिकुमारओ । [ भद्रमुख न खल्वयं ऋषिकुमारः । ]

---

सः तत्सम्बुद्धौ । **एहि** आगच्छ । **तावत्** ( वाक्यालङ्कारे ) । **मोचय** रक्ष । **अनेन** ( बालेन ) । **दुर्मोक्षः** मोचयितुम् अशक्यः हस्तेन करेण **ग्रहः** ग्रहणम् यस्य तेन ( बालकेन ) । **डिम्भस्य** बालस्य **लीलया** क्रीडया । **बाध्यमानम्** पीड्यमानम् । **बालः** शिशुः च सः **मृगाणाम्** पशूनाम् **इन्द्रः** स्वामी च तम् ।

**हिन्दी-अनुवाद**—राजा—( पास पहुँचकर मुस्कराकर ) ओ प्यारे मुनि-पुत्र ।

**संस्कृत-टीका**—**राजा** नृपः । **उपगम्य** उपसृत्य । **स्मितेन** विहासेन सह । अयि ( कोमलामन्त्रणे ) । **भोः** हे । **महान्** उत्कृष्टः च असौ **ऋषिः** मुनिः च तस्य **पुत्रः** सुतः तत्संबुद्धौ ।

**हिन्दी-अनुवाद**—इस प्रकार आश्रम-विरोधी आचरण वाले, तुम क्यों जन्म से ही प्राणियों को आश्रय से सुख देने वाले इस संयम को भी उसी प्रकार दूषित कर रहे हो जिस प्रकार कृष्णसर्प का बच्चा चन्दन के वृक्ष को दूषित करता है ।

**अन्वयः**—एवम् आश्रमविरुद्धवृत्तिना त्वया चन्दनम् कृष्णसर्पशिशुना इव सत्त्वसंश्रयसुखोऽपि संयमः जन्मतः किमिति दूष्यते ।

**संस्कृत-टीका**—**एवम्** पूर्वोक्तप्रकारेण ( सिंहशावकपीडनेन ) **आश्रमात्** तपोवनात् **विरुद्धा** प्रतिकूला **वृत्तिः** आचरणम् यस्य तादृशेन **त्वया** । **चन्दनम्** चन्दनवृक्षः । कृष्णसर्पस्य **शिशुना** शावकेन । **इव** । **सत्त्वानाम्** प्राणिनाम् **संश्रयेण** आश्रयप्रदानेन सुखयति इति । **अपि** । **संयमः** अहिंसादिव्रतम् । **जन्मतः** जन्म आरम्य ( एव ) । **किमिति** केन कारणेन । **दूष्यते** मलिनीक्रियते ।

**हिन्दी व्याख्या**—शेर के बच्चे को कष्ट देना हिंसा है जो आश्रम के संयम ( अहिंसादि ) के विरुद्ध है । "जन्म" का अर्थ बचपन लग सकता है । "कृष्णसर्प" एक विशेष प्रकार का साँप है अतः "कृष्ण" को अलग नहीं लिखा जाता । संयम और चन्दन की तुलना है पर दोनों के लिङ्ग अलग-अलग हैं; बाद के साहित्य में समान-लिङ्ग ही देखा जाता है । "चन्दनः" कर देने से ठीक हो सकता है । "सत्त्व०" विशेषण चन्दन के साथ भी लग सकता है । शीतलता के कारण प्राणी चन्दन के आश्रय में सुख पाते हैं पर कृष्णसर्प उससे लिपट कर प्राणियों को हटा देता है ।

**छन्द**—रथोद्धता जिसमें रगण, नगण, रगण, लघु व गुरु होता है 'रान्नराविह रथोद्धता लगौ ।' राघवभट्ट ने इसे "स्वागता" कहा है जो भूल है ।

**अलंकार**—उपमा और अनुप्रास ।

**हिन्दी अनुवाद**—तपस्विनी, ( हे ) सुमुख, यह मुनि-पुत्र नहीं है ।

**संस्कृत टीका**—**तापसी** तपस्विनी । **भद्रम्** शोभनम् **मुखम्** वदनम् यस्य सः तत्सम्बुद्धौ । **न** । **खलु** निश्चयेन । **अयम्** बालः । **ऋषेः** मुनेः **कुमारः** पुत्रः ।

राजा—आकारसदृशं चेष्टितमेवास्य कथयति । स्थानप्रत्ययात्तु वयमेवं तर्किणः । ( यथाभ्यर्थितमनुतिष्ठन् बालस्पर्शमुपलभ्य आत्मगतम् ) ।

अनेन कस्यापि कुलाङ्कुरेण स्पृष्टस्य गात्रेषु सुखं ममैवम् ।
कां निर्वृतिं चेतसि तस्य कुर्याद्यस्यायमङ्कात्कृतिनः प्ररूढः ॥१९॥

तापसी—( उभौ निर्वर्ण्य ) अच्छरिअं अच्छरिअं । [ आश्चर्यमाश्चर्यम् । ]

राजा—आर्ये किमिव ।

तापसी—इमस्स बालअस्स दे वि संवादिणी अकिदी त्ति विम्हाविदम्हि । अपरिइदस्स वि दे अप्पडिलोमो संवुत्तो त्ति । [ अस्य बालकस्य तेऽपि संवादिन्याकृतिरिति विस्मापितास्मि । अपरिचितस्यापि तेऽप्रतिलोमः संवृत्त इति । ]

---

**हिन्दी-अनुवाद**—राजा—आकृति के अनुरूप इसकी चेष्टा ही ( ऐसा ) बता रही है, पर स्थान के विश्वास से मैं ऐसा अन्दाज लगा रहा हूँ । ( जैसी प्रार्थना की गई थी, उसके अनुसार—शेर के बच्चे को छुड़ाते हुए—करते हुए बालक का स्पर्श पाकर आत्मगत )

**संस्कृत-टीका**—**राजा** । **आकारेण** आकृत्या **सदृशम्** अनुरूपम् । **चेष्टितम्** कार्यम् । **अस्य** । **कथयति** सूचयति । **स्थानस्य** प्रदेशविशेषस्य **प्रत्ययात्** विश्वासेन । **तु** । परम् । **वयम्** अहम् । **एवंतर्किणः** तथानुमानकारकाः । **अभ्यर्थितम्** प्रार्थनाम् अनतिक्रम्य । **अनुतिष्ठन्** आचरन् । **बालस्य** शिशोः **स्पर्शम्** । **उपलभ्य** प्राप्य । **आत्मगतम्** ।

**हिन्दी-व्याख्या**—जैसा स्थान होता है, उसी के अनुसार विश्वास किया जाता है, आश्रम में किसी के होने से यह विश्वास किया जाता है कि यह ऋषि या ऋषिकुमार है ।

**हिन्दी-अनुवाद**—इस किसी ( अज्ञात ) वंश-अंकुर से छुए गये मेरे अङ्गों में ऐसा सुख हो रहा है । उसके हृदय में यह कितनी शांति न पैदा करता होगा जिस भाग्यशाली की गोद से यह उगा है ।

**अन्वय**—कस्यापि कुलाङ्कुरेण अनेन स्पृष्टस्य मम गात्रेषु एवम् सुखम् । तस्य चेतसि अयम् काम् निर्वृतिम् कुर्यात् यस्य कृतिनः अङ्कात् प्ररूढः ।

**संस्कृत-टीका**—**कस्यापि** अज्ञातस्य । **कुलस्य** वंशस्य **अङ्कुरेण** प्ररोहेण । **अनेन** ( बालेन ) **स्पृष्टस्य** । **मम** । **गात्रेषु** अवयवेषु । **एवम्** अनुभूतम् वर्णनातीतम् । **सुखम्** आनन्दः । **तस्य** । **चेतसि** हृदये । **अयम्** ( बालः ) । **काम्** । **निर्वृतिम्** शान्तिम् । **कुर्यात्** विदध्यात् । **यस्य** । **कृतिनः** भाग्यवतः । **अङ्कात्** क्रोडात् । **प्ररूढः** उत्पन्नः ।

**हिन्दी-व्याख्या**—"कस्यापि" से "अवर्णनीयम्" अर्थ भी निकल सकता है । "अङ्कुर" से छोटी उम्र, कोमलता, मनोरमता आदि ध्वनित होती है । "जिसके अङ्क से प्ररूढ है" कहकर पिता माता को संकेतित किया गया है ।

**छन्द**—२।७ द्रष्टव्य ।

**अलंकार**—अर्थापत्ति, रूपक और अनुप्रास ( छेक, वृत्ति व श्रुति ) ।

**हिन्दी-अनुवाद**—तपस्विनी ( दोनों को देखकर )—अचरज ! अचरज !

राजा—( बालकमुपलालयन् )—न चेन्मुनिकुमारोऽयम् अथ कोऽस्य व्यपदेशः।

तापसी—पुरुवंसो। [ पुरुवंशः। ]

राजा—( आत्मगतम् ) कथमेकान्वयो मम। अतः खलु मदनुकारिणमेनमत्रभवती मन्यते। अस्त्येतत्पौरवाणामन्त्यं कुलव्रतम्।

भवनेषु रसाधिकेषु पूर्वं क्षितिरक्षार्थमुशन्ति ये निवासम्।
नियतैकपतिव्रतानि पश्चात्तरुमूलानि गृहीभवन्ति तेषाम्॥ २०॥

---

संस्कृत-टीका—तापसी तपस्विनी। उभौ उभयम् ( बालम् दुष्यन्तम् च )। निर्वर्ण्य दृष्ट्वा। आश्चर्यम् विस्मयः। आश्चर्यम्।

हिन्दी-अनुवाद—राजा—महोदया, कैसा ( अचरज )?

संस्कृत टीका—राजा। आर्ये ( हे ) महोदये। किम इव कथम् ( कथंभूतम् आश्चर्यम् )।

हिन्दी अनुवाद—तपस्विना—इस लड़के और आपकी आकृति मिलती-जुलती है जिससे अचरज में पड़ गई हूँ। यह अपरिचित के भी अनुकूल हो गया है।

संस्कृत-टीका—तापसी। अस्य। बालकस्य। ते तव। अपि च। संवादिनी सदृशी। आकृतिः। इति। विस्मापिता आश्चर्ये पातिता। अस्मि। न पारचितस्य। अपि। ते तव। न प्रतिलोमः विपरीतः ( अनुकूलः )। संवृत्तः जातः।

हिन्दी-व्याख्या—अन्त का वाक्य भी विस्मय का कारण है और वाक्य समाप्ति-सूचक "इति" पद भी अन्त में लगा है जिससे "विस्मापित" के पहले उसे आना चाहिये था। बात-चीत या अचरज में क्रम बिगड़ गया है, यह नितान्त स्वाभाविक है।

हिन्दी-अनुवाद—राजा ( बालक को दुलारते हुए )—यदि यह ऋषि का पुत्र नहीं है तो इसका वंश क्या है?

संस्कृत टीका—राजा। बालकम्। उपलालयन् वत्सलतया आचरन्। न। चेत् यदि। मुनेः कुमारः पुत्रः। अयम्। अथ तदा। कः। अस्य। व्यपदेशः वंशः।

हिन्दी अनुवाद—तपस्विनी—पुरु-वंश।

संस्कृत-टीका—तापसी। पुरोः वंशः।

हिन्दी-अनुवाद—( आत्म-गत )—अयँ! मेरे वंश वाला ही है, इसी से आप इसे मुझसे मिलता-जुलता बता रही हैं। ( लेकिन ) पुरु-वंशियों के कुल का यह अन्तिम व्रत है।

संस्कृत टीका—राजा। आत्मगतम्। कथम् किम्। एकः समानः अन्वयः वंशः यस्य तादृशः मम। अतः अनेन कारणेन। खलु एव। मम अनुकारिणम् संवदन्तम्। एनम् इमम् ( बालम् )। अत्रभवती पूज्या ( भवती )। मन्यते जानाति। ( किंतु ) अस्ति। एतद्। पौरवाणाम् पुरुकुलोत्पन्नानाम्। अन्त्यम् अन्तिमम्। कुलस्य वंशस्य व्रतम् नियमः।

हिन्दी-अनुवाद—जो ( पुरु-वंशी ) पहले पृथ्वी की रक्षा के लिये अत्यत आनन्द वाले महलों में रहना चाहते हैं, उनका घर बाद में, पेड़ की जड़ें हो जाती हैं जहाँ एकमात्र नियम धारण करने

( प्रकाशम् ) न पुनरात्मगत्या मानुषाणामेव विषयः ।

तापसी—जह भद्दमुहो भणादि अच्छरासंबंधेण इमस्स जणणी एत्थ देवगुरुणो तवोवणे प्पसूदा । [ यथा भद्रमुखो भणत्यप्सरःसंबन्धेनास्य जनन्यत्र देवगुरोस्तपोवने प्रसूता । ]

राजा—( अपवार्य )—हन्त द्वितीयमिदमाशाजननम् अथ सा तत्रभवती किमाख्यस्य राजर्षेः पत्नी ।

---

वाली पतिपरायणा स्त्री ( साथ ) रहती है ।

**अन्वयः**—पूर्वम् ये रसाधिकेषु भवनेषु क्षितिरक्षार्थम् निवासम् उशन्ति, पश्चात् तेषाम् नियतैक-पतिव्रतानि तरुमूलानि गृहीभवन्ति ।

**संस्कृत-टीका—पूर्वम्** आदौ ( शैशवे यौवने च )। **ये**। **रसः** आनन्दः **अधिकः** प्रचुरः यत्र तादृशेषु । **भवनेषु** प्रासादेषु । **क्षितेः** पृथिव्याः **रक्षार्थम्** । **निवासम्** । **उशन्ति** इच्छन्ति । **पश्चात्** तदुपरि ( वार्धके )। **तेषाम्** । **नियता** नियमव्यापृता **एका** केवला पतिव्रता सती स्त्री यत्र तादृशानि । **तरोः** वृक्षस्य **मूलानि** तलानि । **गृहीभवन्ति** अगृहाणि गृहाणि भवन्ति ।

**हिन्दी-व्याख्या**—आशय यह है कि पुरुवंशी बुढ़ापे में स्त्री के साथ वन में रहते हैं; यह बालक यहाँ ( वन में ) कैसा आ गया ? रहते हैं तो आसक्ति-वश नहीं, बल्कि पृथ्वी की रक्षा के लिये रहते हैं, यह "क्षितिरक्षार्थम्" से ध्वनित होता है। पत्नी के साथ वानप्रस्थ आश्रम में रहते हैं। पत्नी नियम-युक्त रहती है, अतः पुत्र जन्म की संभावना नहीं है; फिर यह बालक कहाँ से आ गया, यह बताने के लिये ही "नियता" विशेषण रखा गया है।

**छन्द**—३।२१ द्रष्टव्य । **अलंकार**—रूपक व अनुप्रास ।

**हिन्दी अनुवाद**—( प्रकाश )—और न अपने स्वरूप से ही यह मनुष्य- गोचर है ।

**संस्कृत-टीका—प्रकाशम्** । **न**। **पुनः** च । **आत्मनः** स्वस्य **गत्या** स्वरूपेण **मानुषाणाम्** मनुष्याणाम् । **एव** । **विषयः** गोचरः ।

**हिन्दी-व्याख्या**—वह आश्रम कश्यप, अदिति आदि देव-जाति वालों का स्थान था, अतः मनुष्य ( पुरु-वंशी ) का होना वहाँ संभव न लगना स्वाभाविक है ।

**हिन्दी-अनुवाद**—तपस्विनी—सुमुख, ( आप ) का कहना सही है; अप्सरा के संबंध ( लड़की-होने ) से इसकी माँ ने देवों के पिता ( कश्यप ) के इस तपोवन में बच्चे को जन्म दिया था ।

**संस्कृत-टीका—तापसी** । **यथा** यत् । **भद्रमुखः** ( भवान् ) **भणति** वदति ( तत् तथा एव ) । **अप्सरसः संबन्धेन** ( दुहितृत्वात् )। **अस्य** ( बालस्य ) । **जननी** माता । **अत्र** अस्मिन् **देवानाम् गुरोः** पितुः । **तपोवने** आश्रमे । **प्रसूता** ( पुत्रम् ) जनितवती ।

**हिन्दी-अनुवाद**—( अपवारित कर )—अहा ! यह आशा की दूसरी उत्पत्ति है। ( प्रकाश ) अच्छा; वह माननीया, किस नाम के राजर्षि की स्त्री है ?

**संस्कृत-टीका—राजा** । **अपवार्य** । **हन्त** ( हर्षे ) । **द्वितीयम्** अपरम् । **इदम्** उक्तम् । **आशाया मनोरथस्य जननम्** उत्पत्तिः । **प्रकाशम्** । **अथ** । **सा** । **अत्रभवती** मान्या । **का आख्या**

तापसी—को तस्स धम्मदारपरिच्चाइणो णाम संकीत्तिदुं चिंतिस्सदि। [ कस्तस्य धर्मदारपरित्यागिनो नाम संकीर्तयितुं चिन्तयिष्यति। ]

राजा ( स्वगतम् )—इयं खलु कथा मामेव लक्ष्यीकरोति। यदि तावदस्य शिशोर्मातरं नामतः पृच्छामि। अथवाऽनार्यः परदारव्यवहारः। ( प्रविश्य मयूरहस्ता )।

तापसी—सव्वदमण सउंदलावण्णं पेक्ख। [ सर्वदमन शकुन्तलावण्यं प्रेक्षस्व। ]

बालः—( सदृष्टिक्षेपम् ) कहिं वा मे अज्जू। [ कुत्र वा मम माता। ]

उभे—णामसारिस्सेण वञ्चिदो माउवच्छलो। [ नामसादृश्येन वञ्चितो मातृवत्सलः। ]

---

नाम यस्य तादृशस्य। राजा च असौ ऋषिः च तस्य। पत्नी स्त्री।

**हिन्दी-अनुवाद**—तपस्विनी—कौन उस धर्म-पत्नी का त्याग करने वाले का नाम लेने को सोचेगा ?

**संस्कृत-टीका**—तापसो कः। तस्य। धर्मदाराणाम् धर्मपत्न्याः परित्यागिनः निराकर्तुः। नाम ( अपि )। संकीर्तयितुम् वक्तुम्। चिन्तयिष्यति चिन्ताम् ( अपि ) करिष्यति।

**हिन्दी-अनुवाद**—राजा ( स्वगत )—निश्चय ही यह बात मुझे ही निशाना बना रही है। और जो इस बालक को माँ का नाम पूछूँ ? पर पराई स्त्री की चर्चा अनुचित है। ( हाथ में मोर लिये हुए स्त्री प्रवेश कर )

**संस्कृत-टीका** -राजा। स्वगतम्। इयम्। खलु निश्चयेन। कथा चर्चा। माम्। एव। लक्ष्यम् लक्ष्यम् करोति ( सूचयति )। यदि चेत्। तावत् ( वाक्यालङ्कारे ) अस्य। शिशोः बालकस्य। मातरम् जननीम्। नामतः नाम्ना। पृच्छामि अथवा किं तु। अनार्यः अनुचितः। परस्य अन्यस्य। दाराणाम् पत्न्याः। व्यवहारः चर्चा। प्रविश्य। मयूरः शिखी हस्ते करे यस्याः तादृशो।

**हिन्दीव्याख्या**—"नाम पूछने" की जगह "नाम से पूछना" संस्कृत का मुहावरा है। स्त्री का नाम पूछना स्त्री-चर्चा में आने से अशिष्टता मानी गई है।

**हिन्दी अनुवाद**—तपस्विनी—सर्वदमन, शकुन्त (पक्षी) का सलोनापन देखो।

**संस्कृत टीका**—तापसी। ( हे ) सर्वदमन। शकुन्तस्य पक्षिणः लावण्यम् सौन्दर्यम्। प्रेक्षस्व पश्य।

**हिन्दी-व्याख्या**—यहाँ "शकुन्त" से "लावण्य" का "ला" मिलने से "शकुन्तला" आवाज सुनाई पड़ी जिससे बालक को भ्रम होता है।

**अलंकार**—श्लेषवक्रोक्ति।

**हिन्दी-अनुवाद**—( दृष्टि डालकर )—कहाँ है मेरी माँ ?

**संस्कृत-टीका**—बालः। दृष्ट्याः चक्षुषः क्षेपेण पातनेन सह। कुत्र क्व। वा ( वाक्यालङ्कारे ) मम माता।

**हिन्दी अनुवाद**—दोनों—नाम की समानता से माँ को प्यार करने वाले ने धोखा खाया।

**द्वितीया**—वच्छ इमस्स मित्तिआमोरअस्स रम्मत्तणं देक्ख त्ति भणिदो सि। [ वत्स अस्य मृत्तिकामयूरस्य रम्यत्वं पश्येति भणितोऽसि। ]

**राजा**—( आत्मगतम् ) किं वा शकुन्तलेत्यस्य मातुराख्या। सन्ति पुनर्नामधेयसादृश्यानि। अपि नाम मृगतृष्णिकेव नाममात्रप्रस्तावो मे विषादाय कल्पते।

**बालः**—अज्जुए रोआदि मे इसो भद्दमोरओ। [ मातः रोचते म एष भद्रमयूरः। ] ( इति क्रीडनकमादत्ते। )

**प्रथमा**—( विलोक्य सोद्वेगम् ) अम्हहे रक्खाकरंडअ से मणिबंधे ण दीसदि। [ अहो रक्षाकरण्डकमस्य मणिबन्धे न दृश्यते। ]

---

**संस्कृत-टीका**—उभे द्वे ( अपि तापस्यौ )। **नाम्नः सादृश्येन** तुल्यतया। **वञ्चितः** भ्रान्तः। **मातुः** जनन्याः **वत्सलः**।

**हिन्दी-अनुवाद**—दूसरी ( तापसी )—बेटा, मिट्टी के इस मोर की सुन्दरता देखो, यह तुमसे कहा गया है। ( न कि तुम्हारी माँ का नाम लिया गया है )।

**संस्कृत-टीका**—**द्वितीया** अपरा ( तापसी )। **वत्स** पुत्र। **अस्य**। **मृत्तिकायाः** मृदः **मयूरस्य** शिखिनः। **रम्यत्वम्** सुन्दरताम्। **पश्य** विलोकय। **इति**। **भणितः** कथितः। असि।

**हिन्दी अनुवाद**—राजा ( आत्म-गत )—क्या इसकी माँ का नाम शकुन्तला है पर नामों की समानताएँ तो होती हैं। कहीं नाम भर का प्रसङ्ग मृगतृष्णिका की तरह मेरे लिये दुःख कारक न हो जाय!

**संस्कृत-टीका**—**राजा**। **आत्मगतम्**। **किम्**। **वा** ( वाक्यालङ्कारे )। **शकुन्तला**। **इति**। **अस्य** ( बालकस्य )। **मातुः** जनन्याः। **आख्या** नाम। **सन्ति** भवन्ति। **पुनः** तु। **नामधेयस्य** नाम्नः **सादृश्यानि** तुल्यताः। **अपि** ( प्रश्ने )। **नाम** ( सम्भावनायाम् )। **मृगतृष्णिका** मरुमरीचिका। **इव**। **नाम** एव **नाममात्रम्** तस्य **प्रस्तावः** प्रसङ्गः। **मे** मम। **विषादाय** क्लेशाय।

**हिन्दी अनुवाद**—लड़का—माँ, यह अच्छा मोर मुझे भाता है। ( यह कहकर खिलौना लेता है )।

**संस्कृत टीका**—**बालः** ( हे ) **मातः**। **रोचते**। **मे** मह्यम्। एषः। **भद्रः** सुन्दरः च सः **मयूरः** च। **इति** ततः। **क्रीडनकम्**। आदत्ते गृह्णाति।

**हिन्दी अनुवाद**—पहली ( आकुलता के साथ देखकर )—अरे! इसकी कलाई में रक्षा के लिए बाँधी गई ताबीज नहीं दिख रही है।

**संस्कृत-टीका**—**प्रथमा** ( तापसी ) **विलोक्य** दृष्ट्वा। **उद्वेगेन** आकुलत्वेन सह। **अहो रक्षार्थम्** करण्डकम् बद्धः ओषधि-ग्रन्थिविशेषः ( बीटिका )। **अस्य** ( शिशोः )। **मणिबन्धे** करतलमूले )। **न**। **दृश्यते** विलोक्यते।

**राजा—अलमलमावेगेन । नन्विदमस्य सिंहशावविमर्दात्परिभ्रष्टम् ।** ( इत्यादातुमिच्छति )

**उभे—मा खु एवं अवलंबिअ । कहं गहीदं णेण ।** [ मा खल्विदमवलम्ब्य । कथं गृहीतमनेन । ] ( इति विस्मयादुरोनिहितहस्ते परस्परमवलोकयतः )

**राजा—किमर्थं प्रतिषिद्धा स्मः ।**

**प्रथमा—सुणादु महाराओ । एसा अवराजिदा णाम ओसही इमस्स जातकम्मसमए भअवदा मारीएण दिण्णा । एत किल मादापिदरो अप्पाणं च वज्जिअ अवरो भूमिपडिदं ण गेण्हादि ।** [ शृणोतु महाराजः एषाऽपराजिता नामौषधिरस्य जातकर्मसमये भगवता मारीचेन दत्ता । एतां किल मातापितरावात्मानं च वर्जयित्वाऽपरो भूमिपतितां न गृह्णाति । ]

---

**हिन्दी अनुवाद**—राजा—मत घबरायें । यह रहा; सिंह-शावक को इसके खींचने से गिर गया था । ( यह कहकर लेना चाहते हैं ) ।

**संस्कृत-टीका—राजा । अलम्** ( निषेधे ) । अलम् ( निषेधातिशये ) । **आवेगेन** व्यग्रतया । **ननु** निश्चयेन । **इदम्** ( रक्षाकरण्डकम् ) **अस्य** बालस्य । **सिंहस्य शावस्य** शिशोः । **विमर्दात्** आकर्षणात् । **परिभ्रष्टम्** च्युतम् । **इति** ततः । **आदातुम्** ग्रहीतुम् । **इच्छति** कामयते ।

**हिन्दी-अनुवाद**—दोनों—इसे मत लो । अरे ! इन्होंने ले लिया ? ( यह कहकर अचरज से छाती पर हाथ रखकर एक-दूसरी को देखती हैं ।

**संस्कृत-टीका--उभे द्वे** ( अपि तापस्यौ ) । **मा** न । **खलु** ( निषेधे ) । **इदम्** ( रक्षाकरण्डकम् ) । **अवलम्ब्य** गृहीत्वा । **कथम्** अहो । **गृहीतम्** आदत्तम् । **अनेन** ( अभ्यागतेन ) । **इति** ततः । **विस्मयात्** आश्चर्येण । **उरसि** वक्षसि **निहितः** स्थापितः **हस्तः** करः याभ्याम् **तादृश्यौ** ( सत्यौ ) । **परस्परम्** मिथः । **अवलोकयतः** । पश्यतः ।

**हिन्दी-व्याख्या**—आगे पता चलेगा कि वह तावीज माँ-बाप के अलावा कोई छुए तो मर जाय, यह स्थिति थी । बालक के पिता के आने की कोई सम्भावना नहीं थी, अतः तापसियों को डर लगा कि कहीं उसके प्राण न चले जायँ ।

**हिन्दी अनुवाद**—राजा—किसलिये मुझे रोका गया है ?

**संस्कृत टीका—राजा । किमर्थम्** केन कारणेन **प्रतिषिद्धाः** निवारिताः । **स्मः** ।

**हिन्दी-अनुवाद**—पहली ( तापसी )—महाराज सुनें; अपराजिता नामक यह औषधि ( जड़ी-बूटी ) इसके "जातकर्म" के समय श्रीमान् कश्यप ने दी थी । भूमि पर पड़ी होने पर इसे भूलकर भी माता-पिता के और अपने अलावा दूसरा नहीं ग्रहण करता ।

**संस्कृत-टीका—प्रथमा** ( तापसी ) । **शृणोतु । महाराजः । एषा अपराजिता । नाम** ( वाक्यालङ्कारे ) । **ओषधिः । अस्य** ( बालकस्य ) । **जातकर्मणः** ( संस्कारस्य ) **समये** अवसरे । **भगवता** श्रीमता **मारीचेन** मरीचिपुत्रेण ( कश्यपेन ) । **दत्ता । एताम्** ( ओषधिम् ) । **किल**

राजा—अथ गृह्णाति ।

प्रथमा—तदो तं सप्पो भविअ दंसइ । [ ततस्तं सर्पो भूत्वा दशति । ]

राजा—भवतीभ्यां कदाचिदस्याः प्रत्यक्षीकृता विक्रिया ।

उभे—अणेअसो [ अनेकशः ] ।

राजा—( सहर्षम् आत्मगतम् ) कथमिव संपूर्णमपि मे मनोरथं नाभिनन्दामि । ( इति बालं परिष्वजते )

द्वितीया—सुव्वदे एहि इमं वुत्तंतं णिअमव्वावुडाए सउंदलाए णिवेदेम्ह । [ सुव्रते एहि । इमं वृत्तान्तं नियमव्यापृतायै शकुन्तलायै निवेदयावः । ] ( इति निष्क्रान्ते )

---

निश्चयेन । माता च पिता च तौ । **आत्मानम्** । **च वर्जयित्वा** त्यक्त्वा । **अपरः** अन्यः । **भूमौ** पृथिव्याम् । **निपतितां** निहिताम् । **न** । **गृह्णाति** आदत्ते ।

**हिन्दी-व्याख्या**—"जातकर्म" एक संस्कार है जो नाल काटने के पहले बच्चे को सोने की सलाई से शहद और घी को चटाकर किया जाता है :

प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते ।
मन्त्रवत्प्राशनं चास्य हिरण्यमधुसर्पिषाम् ॥ [ मनुस्मृति, २।२९ ]

**हिन्दी अनुवाद**—राजा—और ले तो ?

**संस्कृत-टीका**—**अथ** यदि । **गृह्णाति** ( तदा किम् भवति । )

**हिन्दी-अनुवाद**—पहली—तो साँप होकर उसे काट लेती है ।

**संस्कृत-टीका**—**प्रथमा** । **ततः** तर्हि । **तम्** । **सर्पः** । **भूत्वा** । **दशति** ।

**हिन्दी अनुवाद**—राजा—आप दोनों ने कभी इसका ( सर्प में ) बदलना देखा है ?

**संस्कृत-टीका**—**राजा** । **भवतीभ्याम्** युवाभ्याम् । **कदाचित्** जातु । **अस्याः** ( औषधेः ) **प्रत्यक्षीकृता** दृष्टा । **विक्रिया** ( सर्पत्वे परिणतिरूपः ) विकारः ( परिवर्तनम् ) ।

**हिंदी व्याख्या**—संस्कृत में "विक्रिया", "विकार" या "विकृति" शब्द परिवर्तन के पर्याय-वाची हैं ।

**हिन्दी-अनुवाद**—दोनों—कई बार ।

**संस्कृत टीका**—**उभे** द्वे ( अपि तापस्यौ ) **अनेकशः** बहुधा ।

**हिन्दी अनुवाद**—( आनन्द से आत्मगत ) क्यों ( मैं ) पूर्ण हो जाने पर भी अपनी मनः-कामना ( पुत्र ) का अभिनन्दन नहीं कर रहा हूँ ? ( यह कहकर बालक को छाती से लगाते हैं । )

**संस्कृत टीका**—**राजा** । **हर्षेण** आनन्देन सह । आत्मगतम् । **कथम्** किम् । **इव** ( वाक्यालङ्कारे ) । **संपूर्णम्** । **अपि** । **मे** मम ( निजम् ) । **मनोरथम्** मनःकामनाम् ( पुत्रम् ) **न** । **अभिनन्दामि** । **इति** ततः । **बालम्** शिशुम् । **परिष्वजते** आलिङ्गति ।

**हिन्दी अनुवाद**—दूसरी—( हे ) सुव्रता, आओ; यह समाचार तप में लगी हुई शकुन्तला से बताया जाय । ( इसके बाद दोनों बाहर जाती हैं । )

बालः—मुञ्च मं। जाव अज्जाए सआसं गमिस्सं। [ मुञ्च माम्। यावन्मातुः सकाशं गमिष्यामि। ]

राजा—पुत्रक मया सहैव मातरमभिनन्दिष्यसि।

बालः—मम खु तादो दुस्सदो। ण तुमं। [ मम खलु तातो दुष्यन्तः। न त्वम्। ]

राजा—( सस्मितम् )—एष विवाद एव प्रत्याययति।

( ततः प्रविशत्येकवेणीधरा शकुन्तला )

शकुन्तला—विआरकाले वि पकिदित्थं सव्वदमणस्स ओसहिं सुणिअ ण मे आसा आसि अत्तणो भाअहेएसु। अहवा जह साणुमदीए आचक्खिदं तह संभावीअदि एदं। [ विकारकालेऽपि प्रकृतिस्थां सर्वदमनस्यौषधिं श्रुत्वा न मे आशासीदात्मनो भागधेयेषु। अथवा यथा

संस्कृत-टीका—द्वितीया। ( हे ) सुव्रते। एहि आगच्छ। इमम् पूर्वोक्तम्। वृत्तान्तम् चर्चाम् नियमे तपसि ( व्रते ) व्यापृतायै रतायै। शकुन्तलायै। निवेदयावः सूचयावः। इति ततः। निष्क्रान्ते निर्गते।

हिन्दी-व्याख्या—"नियम" से यह बताया गया है कि अब तक शकुन्तला दुष्यन्त की प्राप्ति के लिये प्रयत्नशील है।

हिन्दी-अनुवाद—लड़का—छोड़ो मुझे। माँ के पास जाऊँगा।

संस्कृत टीका—बालः। मुञ्च त्यज माम्। यावत् ( वाक्यालङ्कारे )। मातुः जनन्याः। सकाशम् समीपे। गमिष्यामि यास्यामि।

हिन्दी अनुवाद—राजा—मुन्ना, मेरे साथ ही माँ का अभिनन्दन करना।

संस्कृत-टीका—राजा। पुत्रक जात। मया। सह समम्। एव। मातरम् ( स्वस्य ) जननीम्। अभिनन्दिष्यसि।

हिन्दी-अनुवाद—लड़का—मेरे पिता तो दुष्यन्त हैं; तुम नहीं।

संस्कृत-टीका—बालः शिशुः। मम। खलु निश्चयेन। तातः पिता। दुष्यन्तः। न। त्वम्।

हिन्दी अनुवाद—राजा ( मुस्कराकर ) यह विरोधी कथन ही विश्वास दिलाता है ( कि तुम मेरे पुत्र हो )।

संस्कृत टीका—राजा नृपः। स्मितेन विहासेन सह। एषः पूर्वोक्तः। विवादः ( बालकस्य ) विरुद्धम् कथनम्। एव। प्रत्याययति विश्वासयति।

हिन्दी-व्याख्या—इसके पहले नाम, कथा, तावीज आदि प्रमाणों में शंका का अवसर थोड़ा-बहुत था भी; "दुष्यन्त" को पिता बनाकर राजा को "पुत्रक" कहने से रोकना ऐसा प्रमाण है जिससे पूर्व प्रमाणों की पुष्टि हो जाती है और कोई शक नहीं रह जाता। विरोधी कथन निषेध करता है, यहाँ उलटे उससे विधि सिद्ध हो गई है, यह चमत्कार है।

हिन्दी-अनुवाद—( इसके बाद एक चोटी धारण करने वाली शकुन्तला प्रवेश करती है। )

शकुन्तला—विकार के समय भी स्वाभाविक स्थिति में ( हो ) सर्वदमन ( बालक ) की औषधि

सानुमत्याख्यातं तथा संभाव्यत एतत् । ]

**राजा**—( शकुन्तलां विलोक्य )—**अये सेयमत्रभवती शकुन्तला । यैषा—**

**वसने परिधूसरे वसाना नियमक्षाममुखी धृतैकवेणिः ।**

**अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं बिभर्ति ॥२१॥**

---

रह गई, यह सुनकर ( भी ) अपना भाग्य खुलने की आशा नहीं थी । या, जैसा सानुमती ने बताया है, यह वैसा ( ही ) हो सकता है ।

**संस्कृत टीका**--**ततः** पश्चात् । **प्रविशति** । **एका** केवला असौ **वेणी** च **तद्धरा** तद्धारिणी । **शकुन्तला विकारस्य** परिवर्तनस्य **काले** समये । **अपि** । **प्रकृतिस्थाम्** स्वभावगताम् ( अपरिवर्तिताम् ), **सर्वदमनस्य** ( शिशोः ) **ओषधिम्** । **श्रुत्वा** निशम्य । **न** । **मे** मम । **आशा** संभावना । **आसीत्** । **आत्मनः** स्वस्य । **भागधेयेषु** सौभाग्येषु । **अथ वा** यद्वा । **यथा** यत् । **सानुमत्या** ( अप्सरोभिः ) **आख्यातम्** कथितम् । **तथा** तद् । **संभाव्यते** संभवम् । **एतत्** पुरः दृश्यमानम् ।

**हिन्दी-व्याख्या**—पति के स्थायी विरह में भी शृंगार न करना और एक चोटी ही रखना सती स्त्रियों का व्रत माना गया है । सुनी बात की पुष्टि देखकर हो गई है; शकुन्तला उक्त सारी बात दुष्यन्त को प्रत्यक्ष करके कह रही है, जाने के पहले सानुमती, पहले, कह चुकी है कि अदिति के अनुसार दुष्यन्त द्वारा शकुन्तला का अभिनन्दन देवता करायेंगे । वही बात उसने शकुन्तला से भी कही होगी । जिसकी चर्चा अपर ने यहाँ की है ।

**हिन्दी-अनुवाद**--राजा (शकुन्तला को निहारकर)--अरे ! मान्य शकुन्तला यह है जो यह—

**संस्कृत-टीका**-**राजा** नृपः । **शकुन्तलाम्** । **विलोक्य** दृष्ट्वा । **अये** अहो । **सा** पूर्वानुभूता । **इयम्** पुरः दृश्यमाना । **अत्रभवती** मान्या । **शकुन्तला** । **या एषा** पुरतः ।

**हिन्दी अनुवाद**—( दो मटमैले कपड़े पहने, तप से दुबले मुँह वाली, एक वेणी धारण किये और शुद्ध स्वभाव ( चरित्र ) वाली ( यह ) मुझ अत्यन्त निर्दय के लिये दीर्घ काल का वियोग व्रत धारण कर रही है ।

**अन्वयः**—परिधूसरे वसने वसाना नियमक्षाममुखी धृतैकवेणिः शुद्धशीला ( च ) अतिनिष्करुणस्य मम दीर्घम् विरहव्रतम् बिभर्ति ।

**संस्कृत-टीका**—**परिधूसरे** मलिने । **वसने** ( द्वे ) वस्त्रे । **वसाना** आच्छादयन्ती । **नियमेन** ( चान्द्रायणादि- ) व्रतेन **क्षामम्** कृशम् **मुखम्** वदनम् यस्याः तादृशी । **धृता एका** केवला ( एव ) वेणी यया तादृशी । **शुद्धम्** पवित्रम् **शीलम्** स्वभावः ( चरितम् ) यस्याः तादृशी ( च ) ( सती ) **अतिनिष्करुणस्य** अतिनिर्दयस्य । **मम** । मत्संबन्धिनम् **दीर्घम्** बहुकालीनम् । **विरहे** वियोगे **व्रतम्** नियमम् । **बिभर्ति** धारयति ( आचरति ) ।

**हिन्दी-व्याख्या**— तप में लगा और दुखी व्यक्ति वस्त्र और सजावट से विमुख रहता है जिससे कपड़े गन्दे हैं और वेणी एक ही है ।

**छन्द**—३।२१ द्रष्टव्य ।

शकुन्तला—( पश्चात्तापविवर्णं राजानं दृष्ट्वा )—ण खु अज्जउत्तो विअ। तदो को एसो दाणिं किदरक्खामंगलं दारअं मे गत्तसंसग्गेण दूसेदि। [ न खल्वार्यपुत्र इव। ततः क एष इदानीं कृतरक्षामङ्गलं दारकं मे गात्रसंसर्गेण दूषयति। ]

बालः—( मातरमुपेत्य ) अज्जुए एसो कोवि पुरिसो मं पुत्त त्ति आलिंगदि [ मातः एष कोऽपि पुरुषो मां पुत्र इत्यालिङ्गति। ]

राजा—प्रिये क्रौर्यमपि मे त्वयि प्रयुक्तमनुकूलपरिणामं संवृत्तम् यदहमिदानीं त्वया प्रत्यभिज्ञातमात्मानं पश्यामि।

---

अलङ्कार—काव्यलिङ्ग, स्वभावोक्ति और अनुपास ( छेक व वृत्ति )।

हिन्दी-अनुवाद—शकुन्तला ( पछतावे से कान्ति-रहित राजा को देखकर )—निश्चय ही यह व्यक्ति स्वामी सा नहीं है। तो यह कौन है जो इस समय रक्षा-सूत्र पहने हुए मेरे बेटे को ( अपने ) शरीर के स्पर्श से दूषित कर रहा है।

संस्कृत टीका—शकुन्तला। पश्चात्तापेन अनुशयेन विवर्णम् कान्तिरहितम्। राजानम् ( दुष्यन्तम् ) दृष्ट्वा। न। खलु निश्चयेन। आर्यपुत्रः स्वामी। इव। ततः तर्हि। कः। एषः। इदानीम् अधुना। कृतम् धारितम् रक्षामङ्गलम् रक्षासूत्रम् येन तादृशम्। दारकम् पुत्रम्। मे मम। गात्राणाम् अङ्गानाम्। संसर्गेण स्पर्शेन। दूषयति अपवित्रम् करोति।

हिन्दी व्याख्या—रक्षा-सूत्र पहने या तपस्वी पुत्र को साधारणतः परस्पर्श से बचाया जाता है।

हिन्दी-अनुवाद—लड़का ( माँ के पास पहुँचकर )—( हे ) माँ, यह न जाने कौन आदमी "पुत्र" मानकर मुझे गले लगा रहा है।

संस्कृत टीका—बालः शिशुः। मातरम् जननीम् ( शकुन्तलाम् ) उपेत्य आगत्य। ( हे ) मातः जननि। एष समीपे स्थितः। कोऽपि अज्ञातः। पुरुषः नरः। माम्। पुत्रः सुतः। इति इत्थम् ( मत्वा )। आलिङ्गति परिष्वजते।

हिन्दी-अनुवाद—( हे ) प्रिये, मेरी निर्दयता भी तुम्हारे प्रति प्रयुक्त होकर अनुकूल फल वाली हो गई है जो मैं इस समय अपने को तुम्हारे द्वारा पहचान लिया गया देख रहा हूँ।

संस्कृत टीका—राजा नृपः। ( हे ) प्रिये दयिते। क्रौर्यम् निर्दयता। अपि। मे मम। त्वयि तव विषये। प्रयुक्तम् कृतम्। अनुकूलः सुखकरः। परिणामः परिपाकः ( फलम् ) यस्य तादृशम्। संवृत्तम् जातम्। यत्। अहम्। इदानीम् अधुना। त्वया। प्रत्यभिज्ञातम् परिचितम् ( न तु निराकृतम् ), आत्मानम् स्वम्। पश्यामि विलोकयामि।

हिन्दी व्याख्या—न पहचान कर अस्वीकार कर राजा ने क्रूरता दिखाई, पर वह भी शकुन्तला से सम्बद्ध होने के कारण या सौभाग्य से अनुकूल हो गई; क्योंकि उसको प्रतिक्रिया के वश होकर शकुन्तला ने नहीं पहचाना, ऐसी बात नहीं है। ऐसा दुर्व्यवहार करने वाले के लिये यह आश्चर्य है। स्वाभाविक तो यह होता कि ऐसे क्रूर को वह पहचानने और स्वीकार करने से इन्कार कर

**शकुन्तला**—( आत्मगतम् )—हिअअ अस्सस अस्सस। परिच्चत्तमच्छरेण अणुअम्पिअ म्हि देवेण। अज्जउत्तो क्खु एसो। [ हृदय आश्वसिहि आश्वसिहि। परित्यक्तमत्सरेणानुकम्पितास्मि दैवेन आर्यपुत्रः खल्वेषः। ]

**राजा**—प्रिये।

स्मृतिभिन्नमोहतमसो दिष्ट्या प्रमुखे स्थितासि मे सुमुखि।
उपरागान्ते शशिनः समुपगता रोहिणी योगम् ॥ २२ ॥

---

देती। मलिन वस्त्र, एक-वेणी व्रत की कृशता और आँखों का भाव सब सूचित करते हैं कि उसमें प्रतिहिंसा नहीं है; क्षमा है।

**हिन्दी-अनुवाद**—शकुन्तला ( आत्म-गत )—( हे ) हृदय, ढाढस रखो; ढाढस रखो। भाग्य ने जलन ( डाह ) त्याग कर कृपा की है। आर्य-पुत्र ही हैं यह।

**संस्कृत-टीका**—**शकुन्तला**। **आत्मगतम्**। ( हे ) **हृदय** अन्तर। **आश्वसिहि** धैर्यम् धारय। आश्वसिहि। **परित्यक्तः** विसृष्टः **मत्सरः** असूया येन तादृशेन। **अनुकंपिता** दयापात्रीकृता। अस्मि। **दैवेन** भाग्येन। **आर्यपुत्रः** स्वामी। **खलु** एव। **एषः**।

**हिन्दी-अनुवाद**--राजा--( हे ) प्रिये!

**संस्कृत-टीका**—**राजा** नृपः ( दुष्यन्तः ) ( हे ) प्रिये दयिते ( शकुन्तले )।

**हिन्दी अनुवाद**—हे सुन्दर मुख वाली, स्मरण आ जाने से जिसका अज्ञान अन्धकार कट चुका है, उस मेरे सम्मुख तुम भाग्य से विद्यमान हो। ग्रहण समाप्त हो जाने पर चन्द्रमा से रोहिणी का मिलन हो गया है।

**अन्वयः**—सुमुखि दिष्ट्या स्मृतिभिन्नमोहतमसः मे प्रमुखे स्थिता असि। उपरागान्ते रोहिणी शशिनः योगम् समुपगता।

**संस्कृत-टीका**—शोभनम् **मुखम्** वदनम् यस्याः सा तादृशी **सुमुखी** तत्संबुद्धौ। **दिष्ट्या** सौभाग्येन। **स्मृत्या** स्मरणेन **भिन्नम्** नष्टम् ( मोहः एव तमः ) **मोहतमः** यस्य तादृशस्य। **मे** मम। **प्रमुखे** संमुखे। **स्थिता**। **असि**। **उपरागस्य** ( चन्द्र–) ग्रहणस्य। **अन्ते** समाप्तौ। **रोहिणी**। **शशिनः** चन्द्रस्य। **योगम्** समागमम्। **समुपगता** प्राप्तवती।

**हिन्दी-व्याख्या**—राघवभट्ट ने "तमः" का अर्थ गाढता दिखाने के लिये "राहु" किया है पर "अन्धकार" अर्थ ज्यादा अच्छा है क्योंकि उसके कारण पहचानने में कठिनाई होती है। रोहिणी एक नक्षत्र है। दक्ष-प्रजापति की २७ पुत्रियाँ चन्द्रमा को ब्याही हैं; ये २७ नक्षत्र हैं; इनमें एक का नाम रोहिणी है। ज्योतिष में इसका क्रम चौथा है।

**छन्द**—१।२ द्रष्टव्य।

**अलंकार**—निदर्शना, दृष्टान्त, संकर ( संदेह– ) व अनुप्रास ( छेक व श्रुति )।

शकुन्तला—जेदु जेदु अज्जउत्तो··· । [ जयतु जयत्वार्यपुत्रः···] ( इत्यर्धोक्ते वाष्पकण्ठी विरमति ) ।

राजा—सुन्दरि !

वाष्पेण प्रतिषिद्धेऽपि जयशब्दे जितं मया ।
यत्ते दृष्टमसंस्कारपाटलोष्ठपुटं मुखम् ॥ २२ ॥

बालः—अज्जुए को एसो । [ मातः क एषः । ]

शकुन्तला—वच्छ दे भाअहेआइं पुच्छेहि । [ वत्स ते भागधेयानि पृच्छ । ]

राजा—( शकुन्तलायाः पादयोः प्रणिपत्य )

---

हिन्दी अनुवाद—शकुन्तला—स्वामी की जय हो; जय हो ( इतना आधा ही कहे जाने पर कण्ठ के गद्‌गद हो जाने से रुक जाती है । )

संस्कृत टीका—शकुन्तला । जयतु सर्वोत्कर्षेण वर्तताम् । जयतु । आर्यपुत्रः स्वामी । इति इदम् । अर्धम् अपूर्णम् ( एव ) उक्ते कथिते । वाष्पः अश्रु कण्ठे गले यस्याः तादृशी । विरमति ।

हिन्दी अनुवाद—राजा—( हे ) सुन्दरी !

संस्कृत टीका—राजा नृपः । ( हे ) सुन्दरि शोभने !

हिन्दी-अनुवाद—"जय" शब्द के आँसू से रुक जाने पर भी मेरी "जय" हो गई जो शृंगार-अभाव से भी श्वेत-रक्त ओष्ठ-पुट वाला तुम्हारा मुख मुझे दिख गया ।

अन्वय—जयशब्दे वाष्पेण प्रतिषिद्धे अपि मया जितम् यत्—असंस्कार-पाटलोष्ठपुटम् ते मुखम् मया दृष्टम् ।

संस्कृत-टीका—जयशब्दे "जयतु" इति पदे । वाष्पेण अश्रुणा । प्रतिषिद्धे विरते । अपि । मया । जितम् जयः प्राप्तः । यत् यतः । असंस्कारेण संस्कारस्य प्रसाधनस्य अभावेन पाटलः श्वेतरक्तः ओष्ठपुटः यस्य तादृशम् । ते तव । मुखम् वदनम् ( मया ) । दृष्टम् विलोकितम् ।

हिन्दी-व्याख्या—आँसुओं से गला रुँध जाना व्यक्त करता है कि भावना के ज्वार ने सीमा तोड़ दी है ।

छन्द—६।१४ द्रष्टव्य ।

अलङ्कार—विरोधाभास, काव्यलिङ्ग और अनुप्रास ( श्रुति व वृत्ति ) ।

हिन्दी अनुवाद—लड़का—माँ, कौन हैं ये ?

संस्कृत टीका—बालः शिशुः । मातः ( हे ) जननि । कः । एषः ।

हिन्दी-अनुवाद—शकुन्तला—बेटा, अपने भाग्य से पूछ ।

संस्कृत-टीका—शकुन्तला । वत्स ( हे ) पुत्र । ते तव ( स्वस्य ) । भागधेयानि भाग्यम् । पृच्छ ।

हिन्दी अनुवाद—राजा ( शकुन्तला के पाँवों में पड़कर )—

सुतनु हृदयात्प्रत्यादेशव्यलीकमपैतु ते
किमपि मनसः संमोहो मे तदा बलवानभूत् ।
प्रबलतमसामेवंप्रायाः शुभेषु प्रवृत्तयः
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥ २४ ॥

शकुन्तला—उट्ठेदु अज्जउत्तो । णूणं मे सुअरिअप्पडिबन्धअं पुराकिदं तेसु दिअहेसु परिणाममुहं आसि जेण साणुक्कोसो वि अज्जउत्तो मइ विरसो संवुत्तो। [ उत्तिष्ठत्वार्यपुत्रः । नूनं मे सुचरितप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणाममुखमासीद्येन सानुक्रोशोऽप्यार्यपुत्रो मयि विरसः संवृत्तः । ] ( राजोत्तिष्ठति )

हे सुन्दर शरीर वाली, तुम्हारे हृदय से मेरे अस्वीकार करने से हुई नाराजी दूर हो; मेरे मन का अज्ञान उस समय न जाने क्यों बहुत बढ़ा-चढ़ा था। प्रबल अन्धकार या तमोगुण वाले लोगों की प्रवृत्तियाँ कल्याणकारी वस्तुओं के विषय में प्राय: ऐसी ही होती हैं। अन्धा व्यक्ति सिर पर डाली गई माला को भी साँप की शंका से हटा देता है।

**अन्वयः**—सुतनु हृदयात् ते प्रत्यादेशव्यलीकम् अपैतु। तदा मे मनसः संमोहः किमपि बलवान् अभूत्। प्रबलतमसाम् प्रवृत्तयः शुभेषु एवंप्रायाः ( भवन्ति )। अन्धः शिरसि क्षिप्ताम् स्रजम् अपि अहिशङ्कया धुनोति।

**संस्कृत टीका**—शोभना तनुः शरीरम् यस्याः सा तत्सम्बुद्धौ । हृदयात् मनसः। ते तव। प्रत्यादेशात् ( मया कृतेन ) निराकरणेन ( जातम् ) व्यलीकम् अप्रियम्। अपैतु दूरीभवतु। तदा तस्मिन् ( निराकरण- ) काले। मे मम। मनसः चित्तस्य। संमोहः अज्ञानम्। किमपि अनिर्वचनीयरूपेण। बलवान् दृढः। अभूत् आसीत्। प्रबलम् दृढम् तमः तमोगुणः ( अन्धकारः ) येषाम् तादृशानाम्। प्रवृत्तयः विचाराः। शुभेषु मङ्गलानाम् विषये। एवं प्रायाः बहुतरम् यत्र तादृशाः ( भवन्ति )। अन्धः नेत्रहीनः। शिरसि मस्तके। क्षिप्ताम् निहिताम्। स्रजम् मालाम्। अपि। अहेः सर्पस्य शङ्कया सन्देहेन ( भयेन )। धुनोति अपसारयति।

**हिन्दी-व्याख्या**—पूरा श्लोक क्षमा-प्रार्थना है। अज्ञान के कारण वैसा हुआ; जानबूझकर नहीं। अब वह अज्ञान चला गया है। अज्ञानी शुभ को अशुभ समझता है। अज्ञान से मैं अन्धा हो गया था और अन्धा अच्छी वस्तु को भी शक से बुरी समझता है, आदि, हृदय का आशय राजा प्रगट कर रहे हैं। राघवभट्ट ने "किमपि" का अर्थ "दूषित" ( तुच्छ ) कर उसे "मनसः" के साथ जोड़कर बहुव्रीहि समास बनाया है जो जटिलता पैदा करता है और कालिदास के प्रसाद-गुण के विपरीत लगता है।

**छन्द**—३।१० द्रष्टव्य।

**अलङ्कार**—अर्थान्तरन्यास, दृष्टान्त, भ्रान्तिमान्, काव्यलिङ्ग और अनुप्रास ( श्रुति व छेक )।

**हिन्दीअनुवाद**—शकुन्तला—स्वामी उठ जायँ। निश्चय ही मेरा पुण्य का बाधक पूर्व कर्म उन दिनों फल देने पर उतारू था, जिससे दयालु होकर भी स्वामी मेरे प्रति उदासीन हो गये थे। ( राजा उठते हैं )

राजा—उद्धृतविषादशल्यः कथयिष्यामि—

मोहान्मया सुतनु पूर्वमुपेक्षितस्ते
यो वाष्पबिन्दुरधरं परिबाधमानः ।
तं तावदाकुटिलपक्ष्मविलग्नमद्य
वाष्पं प्रमृज्य विगतानुशयो भवेयम् ॥ २५ ॥

शकुन्तला—अह कहं अज्जउत्तेण सुमरिदो दुक्खभाई अअं जणो। [ अथ कथमार्यपुत्रेण स्मृतो दुःखभाग्ययं जनः ।

---

संस्कृत-टीका—शकुन्तला । उत्तिष्ठतु । आर्यः स्वामी । नूनम् निश्चयेन । मे मम । शामनम् च तत् चरितम् ( पुण्यम् ) च तस्य प्रतिबन्धकम् बाधकम् । पुरा पूर्वम् । कृतम् कर्म । तेषु ( निराकरणकाले ) । दिवसेषु दिनेषु । परिणामः परिपाकः ( फलम् ) तन्मुखम् तदुन्मुखम् । आसीत् । येन । अनुक्रोशेन दयया सहितः ( सन् ) । अपि । आर्यपुत्रः स्वामी । मयि माम् प्रति । विरसः विगतः रसः रुचिः यस्य तादृशः ( उदासीनः ) । संवृत्तः जातः । राजा नृपः । उत्तिष्ठति ।

हिन्दी अनुवाद—शकुन्तला—अच्छा मुझ दुखिया को स्वामी ने कैसे याद किया ?

संस्कृत टीका—शकुन्तला । अथ । कथम् केन प्रकारेण । आर्यपुत्रेण स्वामिना । स्मृतः दुःखभागा दुःखी । अयम् जनः अहम् ।

हिन्दी-अनुवाद—राजा—दुख के काँटे से मुक्त होकर कहूँगा ।

संस्कृत टीका—राजा । उद्धृतम् दूरीकृतम् ( हृदयात् ) विषादरूपम् क्लेशरूपम् शल्यम् शङ्कुः येन तादृशः ( सन् ) । कथयिष्यामि वदिष्यामि ।

हिन्दी-व्याख्या—स्मृति क्यों आई, इस कथा से पहले अपने हृदय के शोक के काँटे को निकालना जरूरी है; तभी शांति से कथा सुनाई जा सकती है । क्षमा माँगने, आँसू पोंछने आदि से वह काँटा निकलेगा ।

हिन्दी अनुवाद—( हे ) सुन्दर अंग वाली, अज्ञान से मैंने पहले तुम्हारे निचले ओंठ को पीड़ा दे रहे जिस अश्रु विन्दु की उपेक्षा कर दी थी, उसे, जो अब थोड़ी टेढ़ी बरौनी में ( कम हो जाने से ) अश्रु-मात्र के रूप में अटका है, पहले आज ( जरा ) पोंछकर पश्चात्ताप-( दुख ) रहित हो लूँ !

अन्वयः—सुतनु पूर्वम् मया अधरम् परिबाधमानः यः ते वाष्पविन्दुः मोहात् उपेक्षितः तम् आकुटिलपक्ष्मविलग्नम् वाष्पम् अद्य तावत् प्रमृज्य विगतानुशयः भवेयम् ।

संस्कृत टीका—( हे ) सुतनु मनोरमशरीरे । पूर्वम् प्राक् ( अस्वीकृतिकाले ) । मया । अधरम् अधरोष्ठम् । परिबाधमानः पीडयन् । यः । ते तव । वाष्पस्य अश्रुणः विन्दुः कणः । मोहात् अज्ञानात् । उपेक्षितः । तम् । ईषत् कुटिलेषु वक्रेषु पक्ष्मसु नेत्रलोमसु विलग्नम् युक्तम् । वाष्पम् अश्रु । अद्य अधुना । तावत् आदौ । प्रमृज्य अपसार्य । विगतः दूरीभूतः अनुशयः पश्चात्तापः ( दुःखम् ) यस्य तादृशः । भवेयम् स्याम् ।

( इति यथोक्तमनुतिष्ठति ) शकुन्तला ( नाममुद्रां दृष्ट्वा )—अज्जउत्त एदं ते अंगुलीअअं। [ आर्यपुत्र इदं तेऽङ्गुलीयकम्। ]

राजा—अस्मादङ्गुलीयोपलम्भात्खलु स्मृतिरुपलब्धा।

शकुन्तला—विसमं किदं णेण जं तदा अज्जउत्तस्स पच्चअकाले दुल्लहं आसि। ( विषमं कृतमनेन यत्तदार्यपुत्रस्य प्रत्ययकाले दुर्लभमासीत्। )

---

**हिन्दी-व्याख्या**—"मया" कहने से परम-विवेकी, धर्मभीरु और विदग्ध अर्थ निकलने से वाच्य अर्थ अर्थान्तरसंक्रान्त हो जाता है। "बाष्प" "ब्" से आरम्भ होता है जो व्युत्पत्ति-सिद्ध है पर "ब्" से लिखना चल पड़ा है। "बिन्दु" ब् से होना चाहिये; "विन्दु" लिखने पर "विद्वान्" अर्थ हो जाता है। यद्यपि "ब्" और "व्" में भेद नहीं माना जाता। 'बवयोर्भेदो नास्ति', पर वह यमक आदि के लिए है, सामान्य प्रयोग के लिए नहीं। "परिबाधमान" से ध्वनित होता है कि आँसू देर से गिर रहे थे, अधिक थे और जलन से कष्ट दे रहे थे जिससे निचले ओंठ तक चले आये थे, अब वह कारण न रह जाने से वे केवल बरौनी तक हैं। पहले अधर तक आ जाने पर भी नहीं पोंछा था, अब आँख से चलने के पहले ही पोंछ रहा हूँ। राजा को देखते ही पुराना कष्ट याद आने से अथवा खुशी से आँसू निकल आये हैं। अधिक होने से पहले आँसू बूँद के रूप में लुढ़क-लुढ़क कर अधर तक गया था, अब उसने अश्रु-मात्र का रूप धारण कर लिया है जिससे "बाष्प" आया है। साधारणतः ऐसा-दुबारा-प्रयोग नहीं होता जिससे खटक पैदा हुई है। दुष्यन्त की अवस्था इस समय सामान्य नहीं है, अतः "बाष्प" की पुनरुक्ति हो गई है, यह भी कहा जा सकता है।

**छन्द**—१।८ द्रष्टव्य।

**अलङ्कार**—विशेषोक्ति, व्यतिरेक और अनुप्रास ( श्रुति व वृत्ति )

**हिन्दी-अनुवाद**—( इसके बाद कहे-अनुसार करते—आँसू पोंछते—हैं ) शकुन्तला ( नाम की अँगूठी देखकर )—स्वामी, यह तुम्हारी ( वाली वह ) अँगूठी है ?

**संस्कृत-टीका**—**इति** ततः। **उक्तम्** पूर्वकथितम् अनतिक्रम्य। **अनुतिष्ठति** ( अश्रुमार्जनम् ) करोति। शकुन्तला। **नाममुद्राम्** अङ्गुलीयकम्। **दृष्ट्वा** विलोक्य। **आर्यपुत्र** ( हे ) स्वामिन्। **इदम्** ( तव करे )। **ते** तव। **अंगुलीयकम्** मुद्रिका।

**हिन्दी-अनुवाद**—राजा—इस अँगूठी की प्राप्ति से ही याद आई।

**संस्कृत टीका**—**राजा**–नृपः। **अस्मात्**। **अङ्गुलीयस्य** मुद्रायाः **उपलम्भात्** प्राप्तेः। **खलु** एव। **स्मृतिः** स्मरणम्। **उपलब्धा** प्राप्ता।

**हिन्दी अनुवाद**—इसने अनर्थ कर दिया था जो उस समय अप्राप्य हो गई थी जब मैं स्वामी को विश्वास दिलाने ( प्रमाण देने ) चली थी।

**संस्कृत टीका**—शकुन्तला। **विषमम्** अनर्थः। **कृतम्** विहितम्। **अनेन**। **यत्**। **तदा** ( अस्वीकृतिकाले )। **आर्यपुत्रस्य** स्वामिनः। **प्रत्ययकाले** प्रमाणोपस्थापनसमये। **दुर्लभम्** अप्राप्यम्। **आसीत्** अभूत्।

राजा—तेन ह्यृतुसमवायचिह्नं प्रतिपद्यतां लताकुसुमम्।

शकुन्तला—ण से विस्ससामि। अज्जउत्तो एव्व णं धारेदु। [ नास्य विश्वसिमि। आर्यपुत्र एवैतद्धारयतु ] (ततः प्रविशति मातलिः)

मातलिः—दिष्ट्या धर्मपत्नीसमागमेन पुत्रमुखदर्शनेन चायुष्मान् वर्धते।

राजा—अभूत्संपादितस्वादुफलो मे मनोरथः। मातले न खलु विदितोऽयमाखण्डलेन वृत्तान्तः स्यात्।

मातलिः—( सस्मितम् )—किमीश्वराणां परोक्षम्। एत्वायुष्मान्। भगवान्मारीचस्ते दर्शनं वितरति।

हिन्दी अनुवाद—राजा—तो ( अब ) लता ( शकुन्तला ) ऋतु ( दुष्यन्त ) से हो रहे मिलन की निशानी के रूप में पुष्प ( अँगूठी ) धारण करे।

संस्कृत-टीका—तेन हि ( वाक्यालङ्कारे )। ऋतोः वसन्तादेः समवायः मिलनम् तस्य चिह्नम् लक्षणम्। प्रतिपद्यताम् प्राप्नोतु। लता वल्लरी ( कर्त्री )। कुसुमम् पुष्पम्।

अलङ्कार—अप्रस्तुतप्रशंसा।

हिन्दी-अनुवाद—शकुन्तला—इसका विश्वास नहीं करती। स्वामी ही इसे धारण करें। ( इसके बाद मातलि दिखता है। )

संस्कृत-टीका—शकुन्तला। न। अस्य। विश्वसिमि। आर्यपुत्रः स्वामी एव। एतत् धारयतु। ततः पश्चात्। प्रविशति। मातलिः।

हिन्दी अनुवाद-मातलि-आयुष्मान् को धर्मपत्नी-मिलन व पुत्र-मुख-दर्शन की बधाई।

संस्कृत टीका-मातलिः। दिष्ट्या भाग्येन। धर्मपत्न्याः भार्यायाः समागमेन मिलनेन। पुत्रस्य सुतस्य मुखस्य वदनस्य दर्शनेन अवलोकनेन। च। आयुष्मान्। वर्धते वृद्धिम् प्राप्नोति।

हिन्दी-अनुवाद—राजा मेरे मनोरथ में स्वादिष्ट फल लग गया। ( हे ) मातलि, इन्द्र को तो यह समाचार नहीं विदित होगा?

संस्कृत टीका—राजा नृपः। अभूत् जातः। संपादितम् उत्पन्नम् ( स्वादु स्वादिष्टम् च तत् फलम् च ) स्वादुफलम् यस्य तादृशः मे मम मनोरथः कामना। ( हे ) मातले। न खलु ( वाक्यालङ्कारे )। विदितः ज्ञातः। अयम्। आखण्डलेन इन्द्रेण। वृत्तान्तः वृत्तम्। स्यात् भवेत्।

हिन्दी-व्याख्या—यह समाचार परम मित्र—इन्द्र— को भी ज्ञात हो जाय जिससे उन्हें मेरी खुशी से खुशी होगी; उनके पास आने से यह सौभाग्य प्राप्त हुआ, आदि से सौहार्द प्रगट होता है।

हिन्दी-अनुवाद—मातलि ( मुस्कराकर )—समर्थों से क्या छिपा है? आयुष्मान्! आर्य श्रीमान् मरीचि-पुत्र ( कश्यप ) आपको दर्शन दे रहे हैं ( देने की स्वीकृति दी या कृपा की है )।

हिन्दी-व्याख्या—मुस्कराकर बोलना सौहार्द का चिह्न है। इससे यह भी सूचित होता है कि मातलि यह सोचकर, कि सब इन्द्र का ही रचा नाटक है और राजा को पता ही नहीं आनन्द ले रहा है। ब्रह्मा के पुत्र होने से मरीचि की महिमा बहुत थी जिससे पुत्र ( कश्यप ) का महत्त्व बढ़ाने के लिये उन्हें "मारीच" कहा जा रहा है।

राजा—शकुन्तले अवलम्ब्यतां पुत्रः। त्वां पुरस्कृत्य भगवन्तं द्रष्टुमिच्छामि।

शकुन्तला—हिरिआमि अज्जउत्तेण सह गुरुसमीवं गंतुं। [ जिह्रेम्यार्यपुत्रेण सह गुरुसमीपे गन्तुम्। ]

राजा—अप्याचरितव्यमभ्युदयकालेषु। एह्येहि। ( सर्वे परिक्रामन्ति ) ( ततः प्रविशत्यदित्या सार्धमासनस्थो मारीचः। )

मारीचः—( राजानमवलोक्य )—दाक्षायणि !

पुत्रस्य ते रणशिरस्ययमग्रयायी
दुष्यन्त इत्यभिहितो भुवनस्य भर्ता।
चापेन यस्य विनिवर्तितकर्म जातं
तत्कोटिमत्कुलिशमाभरणं मघोनः॥ २६॥

---

हिन्दी-अनुवाद—राजा—( हे ) शकुन्तला, बेटे को सँभालो; तुम्हें आगे कर श्रीमान् ( कश्यप ) का दर्शन करना चाहता हूँ।

संस्कृत-टीका—राजा नृपः। ( हे ) शकुन्तले अवलम्ब्यताम् गृह्यताम्। पुत्रः सुतः। त्वाम् पुरस्कृत्य अग्रे कृत्वा। भगवन्तम् श्रीमन्तम् ( कश्यपम् )। द्रष्टुम् विलोकितुम्। इच्छामि कामये।

हिन्दी अनुवाद—शकुन्तला—स्वामी के साथ गुरु-जनों के पास जाते लाज लग रही है।

संस्कृत-टीका—शकुन्तला। जिह्रेमि लज्जे। आर्यपुत्रेण स्वामिना। सह समम्। गुरूणाम् पूज्यजनानाम् समीपे अन्तिके। गन्तुम् यातुम्।

हिन्दी अनुवाद—राजा—उन्नति के अवसरों पर यह तो शिष्टाचार भी है। आओ; आओ। ( सब घूमते हैं ) ( इसके बाद अदिति के साथ आसन पर स्थित मरीचिपुत्र, कश्यप, दिखते हैं। )

संस्कृत-टीका—राजा नृपः। अपि। आचरितव्यम् कर्तव्यम्। अभ्युदयस्य उन्नतेः कालेषु अवसरेषु। एहि आगच्छ। एहि। सर्वे सकलाः ( जनाः )। परिक्रामन्ति मण्डलाकृति गच्छन्ति। ततः पश्चात्। प्रविशति दृश्यते। अदित्या ( पत्न्या )। सार्धम् सह। आसनस्थः आसने आसीनः। मारीचः मरीचिपुत्रः ( कश्यपः )।

हिन्दी-अनुवाद—मरीचि-पुत्र ( कश्यप ) ( राजा को देखकर )—दक्ष-पुत्री !

संस्कृत-टीका—मारीचः मरीचिपुत्रः ( कश्यपः )। राजानम् नृपम्। अवलोक्य दृष्ट्वा। (हे) दाक्षायणि दक्षसुते।

हिन्दी व्याख्या—"मारीच" और "दाक्षायणी" शब्द क्रमशः मरीचि और दक्ष से सम्बन्ध होने से सन्तान का गौरव बढ़ाते हैं।

हिन्दी-अनुवाद—ये तुम्हारे बेटे ( इन्द्र ) के युद्ध के अगले मोर्चे पर आगे-आगे चलने वाले विश्व के स्वामी "दुष्यन्त" कहे जाते हैं जिनके धनुष से सम्पन्न हुए कार्य वाला तीक्ष्ण-धार-युक्त वह वज्र इन्द्र की शोभा ( मात्र ) रह गया है।

अदितिः—संभावणीआणुभावा से आकिदी । [ संभावनीयानुभावाऽस्याकृतिः ] ।

मातलिः—आयुष्मन् एतौ पुत्रप्रीतिपिशुनेन चक्षुषा दिवौकसां पितरावायुष्मन्तमवलोकयतः । तावुपसर्प ।

राजा—मातले एतौ ।

---

अन्वयः—अयम् ते पुत्रस्य रणशिरसि अग्रयायी भुवनस्य भर्ता दुष्यन्तः इति अभिहितः यस्य चापेन विनिवर्तितकर्म तत् कोटिमत् कुलिशम् मघोनः आभरणम् जातम् ।

**संस्कृत टीका—अयम्** पुरतः विद्यमानः जनः **ते** तव ( अदितेः ) **पुत्रस्य** सुतस्य ( इन्द्रस्य ) । **रणस्य** युद्धस्य **शिरसि** अग्रभागे । **अग्रयायी** अग्रगामी । **भुवनस्य** लोकस्य । **भर्ता** स्वामी । **दुष्यन्तः** । **इति** एवम् । **अभिहितः** उक्तः ( लोकैः ) । **यस्य चापेन** धनुषा । **विनिवर्तितम्** सम्पादितम् **कर्म** कृत्यम् यस्य तादृशम् । **कोटिमत्** तीक्ष्णप्रान्तम् तत् प्रसिद्धम् । **कुलिशम्** वज्रम् । **मघोनः** इन्द्रस्य । **आभरणम्** भूषणम् ( शोभा ) ( एव ) **जातम्** वृत्तम् ।

**हिन्दी-व्याख्या**—"कोटिमत्" से युद्ध की क्षमता ध्वनित होती है कि वज्र का जो दानव-नाश रूपी कार्य है, वह दुष्यन्त का धनुष कर देता है, अतः वज्र को कुछ नहीं करना पड़ता; वह अस्त्र न होकर भूषण हो गया है । माँ के सामने उसके पुत्र के हितैषी के रूप में किसी को प्रस्तुत करना उसे विशेष आकर्षक बनाता है, यहाँ अदिति के सामने राजा को उसी रूप में पेश किया गया है ।

**छन्द**—१।७ द्रष्टव्य ।

**अलङ्कार**—उदात्त, रूपक और अनुप्रास ( छेक व वृत्ति ) ।

**हिन्दी-अनुवाद**—इनके स्वरूप से ( ही ) ( इनके ) प्रभाव का अनुमान किया जा सकता है ।

**संस्कृत टीका—अदितिः** देवमाता । **संभावनीयः** अनुमेयः **अनुभावः** प्रभावः यस्याः तादृशी । **अस्य** ( राज्ञः ) । **आकृतिः** स्वरूपम् ।

**हिन्दी-अनुवाद**—मातलि—( हे ) आयुष्मन्, आयुष्मान् ( आप ) को देवों के ये माता-पिता पुत्र-स्नेह-सूचक दृष्टि से देख रहे हैं । उनके समीप जायें ।

**संस्कृत-टीका—मातलिः** इन्द्रसारथिः । ( हे ) आयुष्मन् ! **एतौ** । पुत्रे सुते प्रीतिः प्रेम तस्य **पिशुनेन** सूचकेन । **चक्षुषा** दृष्ट्या । **दिवम् स्वर्गः ओकः** गृहम् येषाम् तेषाम् ( देवानाम् ) । माता पिता जनकः च ( पितरौ ) । **आयुष्मन्तम्** ( भवन्तम् ) । **अवलोकयतः** पश्यतः । **तौ** एतौ । **उपसर्प** समीपे गच्छ ।

**हिन्दी व्याख्या**—इन्द्र इनके पुत्र हैं, राजा उन ( इन्द्र ) के मित्र और उपकारी मित्र हैं, अतः राजा के प्रति इन ( अदिति व कश्यप ) का पुत्र-स्नेह स्वाभाविक है ।

**हिन्दी-अनुवाद**—राजा—( हे ) मातलि, ये दोनों—

**संस्कृत-टीका—राजा** नृपः । ( हे ) मातले ! **एतौ** ( अदितिः कश्यपः च ) ।

प्राहुर्द्वादशधा स्थितस्य मुनयो यत्तेजसः कारणं
भर्तारं भुवनत्रयस्य सुषुवे यद्यज्ञभागेश्वरम् ।
यस्मिन्नात्मभवः परोऽपि पुरुषश्चक्रे भवायास्पदं
द्वन्द्वं दक्षमरीचिसंभवमिदं तत्स्रष्टुरेकान्तरम् ॥ २७ ॥

**हिन्दी-अनुवाद**—दक्ष और मरीचि से उत्पन्न विधाता से एक ( पीढ़ी ) के अन्तर वाला वह ( प्रसिद्ध ) जोड़ा है जिसे ऋषियों ने बारह रूपों में विद्यमान तेज ( आदित्य ) का कारण माना है, जिन्होंने तीनों लोकों के स्वामी और यज्ञ में भाग प्राप्त करने वालों ( देवों ) के राजा ( इन्द्र ) को जन्म दिया है तथा जन्म के लिये जिनमें अपने से उत्पन्न होने वाले परम पुरुष ( विष्णु ) ने भी स्थान बनाया था ।

**अन्वयः**—इदम् दक्षमरीचिसंभवम् स्रष्टुः एकान्तरम् तत् द्वन्द्वम् यत् मुनयः द्वादशधा स्थितस्य तेजसः कारणम् प्राहुः यत् भुवनत्रयस्य भर्त्तारम् यज्ञभागेश्वरम् सुषुवे यस्मिन् ( च ) भवाय आत्मभवः परः पुरुषः अपि आस्पदम् चक्रे ।

**संस्कृत-टीका**—**इदम्** पुरतः वर्तमानम् । **दक्षः** च **मरीचिः** च **दक्षमरीची** तयोः **संभवः** जन्म यस्य तादृशम् । **स्रष्टुः** विधेः । **एकम्** एकपुरुषमात्रम् **अन्तरम्** व्यवधानम् यस्य तादृशम् । **तत्** प्रसिद्धम् । **द्वन्द्वम्** युगलम् । **यत्** ( कर्म ) **मुनयः** ऋषयः ( व्यासादयः ) । **द्वादशधा** द्वादशमूर्तिधरतया ( द्वादशकलात्मकतया वा ) । **स्थितस्य** विद्यमानस्य **तेजसः** आदित्यस्य । **कारणम्** निदानम् । **प्राहुः** वदन्ति । **यत्** ( कर्तृ ) । **भुवनानाम्** लोकानाम् **त्रयम्** त्रयी तस्या । **भर्तारम्** स्वामिनम् ; **यज्ञे भागः** येषाम् ते यज्ञभागाः ( देवाः ) तेषाम् **ईश्वरम्** अधिपतिम् ( इन्द्रम् ), **सुषुवे** जनयामास । **यस्मिन्** ( च ) **भवाय** जन्मप्राप्तये । **आत्मनः** स्वस्मात् **भवः** जन्म यस्य सः । **परः** परमः **पुरुषः** ( विष्णुः ) । **आस्पदम्** स्थानम् । **चक्रे** कृतवान् ।

**हिन्दी-व्याख्या**—अदिति के पुत्र आदित्य कहलाते हैं जो तेजस्वरूप माने जाते हैं । ये इन्द्र, विष्णु, अर्यमा, धाता, त्वष्टा, पूषा, विवस्वान्, सविता, मित्र, वरुण, अंशु और भग हैं । विष्णुपुराण में ये निम्नलिखित क्रम से गिनाये गये हैं—

तत्र विष्णुश्च शक्रश्च अज्ञाते पुनरेव हि ।
अर्यमा चैव धाता च त्वष्टा पूषा तथैव च ॥
विवस्वान् सविता चैव मित्रो वरुण एव च ।
अंशुर्भगश्चादितिज आदित्या द्वादश स्मृताः ॥

१२ मासों में सूर्य की मूर्तियाँ अलग-अलग मानकर उन्हें "द्वादशधा स्थित" कहा जा सकता है । "द्वादशधा" से "द्वादश कलात्मक-रूप में" अर्थ भी हो सकता है । ये कलाएँ निम्न श्लोक में गिनाई गई हैं—'तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः । सुषुम्णा भोगदा विश्वा बोधिनी धारिणी क्षमा ॥' द्वादश आदित्यों में से इन्द्र और उपेन्द्र के विशेष प्रतापी होने से उनका वर्णन मध्य में कर दिया गया है, शेष इतने प्रसिद्ध नहीं है, अतः "द्वादशधा" में उनका संकेत मात्र कर दिया

मातलिः—अथ किम् ।

राजा—( उपगम्य )—उभाभ्यामपि वासवानुयोज्यो दुष्यन्तः प्रणमति ।

मारीचः—वत्स चिरं जीव । पृथिवीं पालय ।

अदितिः—वच्छ अप्पडिरहो होहि । [ वत्स अप्रतिरथो भव । ]

---

है । इस तरह कोई विरोध नहीं रह जाता । वेदकालीन देवताओं में इन्द्र की और पुराणकालीन देवताओं में विष्णु की महिमा विशेष है, अतः दोनों का विशेष वर्णन किया गया है । इससे यह सूचित होता है कि कवि ऐसे समय में हुआ जब वैदिक देवताओं का प्रभाव पौराणिक देवताओं के कारण पूरी तरह मिट नहीं गया था । "श्रय" और "यज्ञ भाग" पदों से इन्द्र का और "आत्म" और "पर" पदों से विष्णु का उत्कर्ष बताकर अदिति और कश्यप को उनका भी पिता कहकर इनका माहात्म्य सर्वोत्कृष्ट रूप में प्रस्तुत किया गया है । वामनावतार में विष्णु ने अदिति और कश्यप के पुत्र के रूप में जन्म लिया था । विष्णुपुराण में यह कथा आती है—

मन्वन्तरे च संप्राप्ते तथा वैवस्वते द्विज ।
वामनः कश्यपाद् विष्णुरदित्यां संबभूव ह ॥

ब्रह्मा के मानस-पुत्र दक्ष और मरीचि हैं । दक्ष की पुत्री अदिति है और मरीचि के पुत्र कश्यप हैं । इस तरह ब्रह्मा और अदिति-कश्यप के युगल के बीच एक पीढ़ी का व्यवधान है ।

छन्द—१।१४ द्रष्टव्य ।

अलङ्कार—उदात्त, अर्थापत्ति और अनुप्रास ( छेक व वृत्ति ) ।

हिन्दी-अनुवाद—मातलि–बिलकुल ठीक ।

संस्कृत-टीका—मातलिः अथ किम् आम् ।

हिन्दी अनुवाद—राजा ( पास जाकर )—इन्द्र का सेवक दुष्यन्त आप दोनों को प्रणाम करता है ।

संस्कृत-टीका—राजा नृपः । उपगम्य समीपे गत्वा । उभाभ्याम् द्वाभ्याम् ( युवाभ्याम् ) । अपि । वासवस्य इन्द्रस्य अनुयोज्यः सेवकः दुष्यन्तः प्रणमति वन्दते ।

हिन्दी व्याख्या—"नम्" धातु के योग में द्वितीया होती है, पर कभी-कभी चतुर्थी होती है, यहाँ "उभाभ्याम्" में चतुर्थी है ।

हिन्दी-अनुवाद—मरीचि-पुत्र ( कश्यप )—बेटा, दीर्घ-जीवी होओ; पृथ्वी का पालन करो ।

संस्कृत-टीका—मारीचः मरीचिपुत्रः ( कश्यपः ) । वत्स ( हे ) पुत्र । चिरम् बहुकालम् यावत् । जीव । पृथिवीम् भुवम् । पालय रक्ष ।

हिन्दी-अनुवाद—अदिति—बेटा, तुम्हारी जोड़ का कोई न रहे ।

संस्कृत-टीका—अदितिः देवमाता । वत्स ( हे ) पुत्र । प्रतिकूलः रथः यस्य सः प्रतिरथः न प्रतिरथः अप्रतिद्वन्द्वी यस्य तादृशः । भव ।

